# ॥ श्रीशिवस्तवः २ ॥

## ॥ शिवस्तवः ॥

ॐ नमः शिवाय शर्वाय देवदेवाय वै नमः ।
रुद्राय भुवनेशाय शिवरूपाय वै नमः ॥ १॥

त्वं शिवस्त्वं महादेव ईश्वरः परमेश्वरः ।
ब्रह्मा विष्णुश्च रुद्रश्च पुरुषः प्रकृति-स्तथा ॥ २॥

त्वं कालस्त्वं यमो मृत्यु-र्वरुणस्त्वं कुबेरकः ।
इन्द्रः सूर्यः शशाङ्कश्च ग्रह-नक्षत्र-तारकः ॥ ३॥

पृथिवी सलिलं त्वं हि त्वमग्नि-र्वायुरेव च ।
आकाशं त्वं परं शून्यं सकलं निष्कलं तथा ॥ ४॥

अशुचिर्वा शुचिर्वापि सर्वकामगतोपि वा ।
चिन्तयेद्देवमीशानं स बाह्याभ्यन्तरः शुचिः ॥ ५॥

नमस्ते देवदेवेश त्वत्प्रसादाद्ददाम्यहम् ।
वाक्ये हीनेऽतिरिक्ते वा मां क्षमस्व सुरोत्तम ॥ ६॥

नमस्ते देवदेवेश ईशान वरदाच्युत ।

मम सिद्धिं भूयश्च (सिद्धिः सदा भूयात्) सर्वकार्येषु शंकर ॥ ७॥

ब्रह्मा विष्णुरीश्वरश्च महादेव नमोऽस्तु ते ।

सर्वकार्यं प्रसिध्यतां क्षमानुग्रहकारण ॥ ८॥

॥ शुभम् ॥